की यहाँ सार्थकता है, क्योंकि वही 'आकाशगतमेघमालासमावृतत्व', उत्प्रेक्ष्यमाण 'निर्लोचनवर्गसर्गत्व' के समानाधिकरण होने के कारण निमित्त होने योग्य 'सघन अन्धकारप्रयुक्त नेत्र से होनेवाले सब प्रकार के ज्ञान से रहित होना' रूप धर्म को उपस्थित करता है। तात्पर्य यह कि जगत् रूप विषय में की जानेवाली 'निर्लोचनवर्गसर्गत्व'-की उत्प्रेक्षा में जगद्गत 'सघन अन्धकारप्रयुक्त चाक्षुषज्ञानसामान्यशून्यत्व'रूप धर्म निमित्त होता है पर वह निमित्त धर्म उक्त नहीं है, उसकी उपस्थिति उक्त 'आकाशगत मेघमालासमावृतत्व' से होती है—अर्थात् 'आकाश मेघमाला से आवृत है' ऐसा कहने पर उससे आप घना अन्धकार और उस घने अन्धकार के कारण संसार का नेत्रद्वारक सभी ज्ञानों से वञ्चित होना सिद्ध हो जाता है, इस तरह से उक्त धर्म का प्रकृत उत्प्रेक्षा में उपयोग, साक्षात् न सही, पर परम्परया अवश्य होता है।

विषयगत विशेषं स्फोरयति—

विषयोऽप्युपात्तो निरूपित एव। क्वचिदयमपह्नुतोऽपि भवति।

निमित्त-धर्मवत् उत्प्रेक्षाया विषयोऽपि शब्दोपात्त पूर्वोदाहरणेषु ( 'तमयमैनाक—' इत्यत्रोत्प्रेक्ष्यस्य विषयिणो हिमगिरिभुजस्य भागीरथीरूपो विषय', 'अम्भोजिनीबान्धव-' इत्यत्र शुक्लगुणस्य विषयिण बकसमाजरूपो विषय, एवमादि ) निरूपित एव। अयं विषय क्वचिदपह्नुतोऽपि भवतीति भाव'।

विषयगत विशेष का स्पष्टीकरण किया जाता है—विषयोऽपि इत्यादि। निमित्तभूत धर्म के समान उत्प्रेक्षा का उपात्त विषय भी निरूपित हो चुका है—अर्थात् 'तमयमैनाक—' इस पद्य में 'भागीरथी'रूप, 'अम्भोजिनीबान्धव—' इस पद्य में 'बकसमाज'-रूप इसी तरह अन्यत्र अन्यरूप, उपात्त विषय दिखलाया जा चुका है। पर इससे यह नहीं समझना चाहिए कि विषय सर्वत्र उपात्त ही होता है। कहीं-कहीं वह अपह्नुत ( छिपा हुआ ) भी होता है।

अपह्नुत विषयमुदाहर्तुमाह—

यथा—

जैसे—

उदाहरणमुपन्यस्यति—

'जगदन्तरममृतमयैरंशुभिरापूरयन्नयं नितराम्।
उदयति वदनव्याजात् किमु राजा हरिणशावनयनायाः॥'

इति रसगङ्गाधर उत्प्रेक्षाप्रकरणम्।

---

अमृतमयै' सुधामयै, अंशुभि किरणै, जगदन्तर जगन्मध्यम्, नितराम् अत्यन्तम्, आपूरयन्, हरिणशावनयनाया मृगाक्ष्या, वदनव्याजात् मुखच्छलात्, अय दृश्यमान, राजा चन्द्र, उदयति उदेति किमु? इत्यर्थ। अत्र मुखरूपो विषयोऽपह्नुत तदपह्नवश्चात्र—राजतादात्म्यसम्भावनादार्ढ्यायेति बोध्यम्।

चकास्ति लघुकायोऽपि कोविदायोदवर्धन।
मिथिलास्वर्णदोशोभिसरोजश्रियमाश्रित ॥ १ ॥
'नवानी'नामको ग्रामो गुणग्रामाभिमण्डित'।
मण्डले दरभङ्गाख्ये विख्यातबुधजन्मभू ॥ २ ॥ ( युग्मकम् )

तस्मिन्मातृपुरे, पित्र्यं पुरं 'शतलखा'भिधम् ।
विहाय विद्यामध्यैष्ट विशिष्य योऽतिमिष्टवाक् ॥ ३ ॥
समाप्याध्ययनं यत्र संग्रामपुरवर्तिनि ।
विद्यालये विप्रपुत्रान् पञ्चवर्षाण्यपाठयत् ॥ ४ ॥
मुजफ्फरपुरे राजमहाविद्यालये तु यः ।
साहित्यविषयस्यास्ते प्रधानाध्यापकोऽधुना ॥ ५ ॥
रहस्यमतिसंक्षिप्तं रसगङ्गाधरस्य यः ।
प्रागुदात्तवचोभङ्ग्या प्राकाशयदुदारधीः ॥ ६ ॥
रसगङ्गाधरस्यैव प्रथमाननमागमाम् ।
हिन्दीव्याख्यया ततो यश्च विशदामुदपादयत् ॥ ७ ॥
'मदनमोहन'-नामसुधीरिमामरचयद्रुचिरां स च 'चन्द्रिकाम्' ।
सुभजनो यदि तां विनिभालयेत्, श्रम इहैष तदा सफलो भवेत् ॥ ८ ॥
यदि मनागपि सज्जनमानसे मृदुलतानलिनीनिलयेऽतुले ।
रुचिमुदञ्चयिता मम 'चन्द्रिका' किमधिकैरपि दुर्जनदूषणैः ॥ ९ ॥
जगन्नाथकृतस्यैव रसगङ्गाधरस्य या ।
चन्द्रिकाख्या महाभिख्या व्याख्या सत्यास्तां मुदे ॥ १० ॥
प्रारब्धाऽब्धि-धरा-व्योम-नेत्र-संख्यासमन्विते ( २०१४ ) ।
वैक्रमेऽब्दे गता पूर्तिं कृष्णोत्पत्तितिथौ तु सा ॥ ११ ॥ ( युग्मकम् )

इति मैथिलब्राह्मणवंशावतंसेन बिहारप्रान्तीयमुजफ्फरपुरस्थराजकीयधर्मसमाज-
संस्कृतमहाविद्यालये साहित्यप्रधानाध्यापकपदमलङ्कुर्वता श्रीमदन-
मोहनझा शर्मणा कृतायां रसगङ्गाधर-चन्द्रिकायां
द्वितीयाननादिरुत्प्रेक्षान्तो भागः समाप्तः ।



उदाहरण का निर्देश किया जाता है—जगदन्तर इत्यादि। अमृतमय अपनी किरणों से जगत् के मध्यभाग को अत्यन्त पूर्ण करता हुआ, यह क्या, मृगाक्षी के मुख के मिष से चन्द्र उदित हो रहा है? यहाँ मुखरूप विषय में अभेदसम्बन्ध से चन्द्रमा की उत्प्रेक्षा की जाती है। पर मुखरूप विषय यहाँ 'व्याज' पद कहकर छिपा लिया गया है और इस छिपाने का फल है 'मुख में चन्द्रमा के अभेद की संभावना का दृढ़ हो जाना'। अर्थात् इस तरह कहने से उत्प्रेक्षा और भी दृढ़ हो जाती है।

इति दरभङ्गामण्डलान्तर्गत 'नवानी'ग्रामनिवासी, मैथिलब्राह्मणवंशावतंस, व्याकरण-न्याय साहित्याचार्य, मुजफ्फरपुरस्थ राजकीयसंस्कृतमहाविद्यालयीय साहित्य-प्रधानाध्यापक श्री मदनमोहन झा रचित रसगङ्गाधर
( द्वितीय आननगत उत्प्रेक्षानिरूपणान्त भाग ) की
'चन्द्रिका' हिन्दी व्याख्या समाप्त हुई।



समाप्तश्चाऽयं द्वितीयाननस्योत्प्रेक्षान्तो भागः

## टीकाकर्तुः परिचयः

मान्ये मिथिलादेशे सविशेषे सद्गुणैरखिलैः ।
सीतासम्भवभूमौ सुरमुनिलोभास्पदे पूते ॥ १ ॥
'कोइलख'पदविदितो ग्रामो शुचि-गणाश्रयो जयति ।
यत्रैकस्मिन् मञ्चे नृत्यन्तौ वाङ्रमे दृष्टे ॥ २ ॥ (युग्मकम्)
तत्रासीदतिधीरो 'विद्यानाथो' विदां श्रेष्ठः ।
मैथिलभूसुरभूषाभूतो भवसेवया पूतः ॥ ३ ॥
तत्तनयो 'मणि' नामा मणिरिव किरणोज्ज्वलो जातः ।
'सीमा' नाम्नि ग्रामे स्ववासमसौ कल्पयामास ॥ ४ ॥
तत्रासौ शुभशीलो निजविशुद्धबुद्धिबलमूलम् ।
धेनु-धरा-धान्य-धनं सघनयशः शोभितं लेभे ॥ ५ ॥
क्षत्रौ कूपतडागौ ख्यातस्तत्र खानितौ तेन ।
अद्यापि तस्य कीर्तिं कथयन्तौ लोलकल्लोलैः ॥ ६ ॥
भ्राता तस्य कनीयानतुलबल कोऽपि मल्लोऽभूत् ।
तद्भागेऽद्य यदानीतपृथुलशिला शोभते पृष्ठा ॥ ७ ॥
मणिरुपलेभे ललितं 'ललितलाल'नामकं तनयम् ।
विनयविभूषितहृदयं सदय सकलशास्त्रियोगेऽपि ॥ ८ ॥
तस्य द्वौ समभूताम् पुत्रौ जनलोचनानन्दौ ।
'सिद्धेश्वर'-'कपिलेश्वर'नामानौ परिणते वयसि ॥ ९ ॥
अथ दैवाद्रभद्रा राजकर्मचारिभिः प्रबलैः ।
समुपद्रुतं स्वकीयं ग्रामं तौ तूर्णमत्यजताम् ॥ १० ॥
नेदीयस्यतिरम्ये श्वशुरपुरे 'शातलखा'संज्ञे ।
यतः 'सिद्धेश्वरशर्मा' कृतवसतिर्जीवनं निन्ये ॥ ११ ॥
'कपिलेश्वर'स्तदानीं बालो 'नरहा' पुरे मातुः ।
विहिताश्रयोऽधुनावधि जीवति बहुभिः सुतैः सार्धम् ॥ १२ ॥
पुत्रास्त्रयो विनीताः 'सिद्धेश्वर' शर्मणो जाताः ।
त्यक्त्वा यानतिबाल्ये पिता पुरन्दरपुरीं प्रास्थात् ॥ १३ ॥
पूज्यो 'युगलकिशोरो' मम तु पिता मध्यमस्तेषाम् ।
कृतकृत्योऽसौ सम्प्रति जीवति देवार्चने लीनः ॥ १४ ॥

अद्यग्रामस्य 'नवानी' वसतौ मातु: कृतावासः ।
निजजीवनं निनीषे 'चमत्कचिन्त्य हि दैवस्य' ॥ १५ ॥
'व्रजमोहनोपमोहननामानौ भ्रातरौ धीरौ ।
विद्या-विनय-समेतौ प्राणसमौ मे प्रियौ भवत ॥ १६ ॥
'कामेश्वरी' प्रिया मे सत्कुल-शीलान्विता पत्नी ।
कुटिलां जीवनयात्रां सरलामेवाधुना कुरुते ॥ १७ ॥
'आनन्द' खलु प्रथमो 'धीरेन्द्र'श्च द्वितीयो मे ।
पुत्रौ विनयसमेतौ विलसति विद्यार्जने लीनौ ॥ १८ ॥
कन्ये द्वे कमनीये 'गङ्गा-सरिता'-भिधे गेहम् ।
मुखरयतो मधुकल्पैर्बाल्योचितवचनविन्यासैः ॥ १९ ॥
श्रीमान् 'यदुपतिमिश्रो' गुरुस्तमिस्राकुले नयने ।
प्रोन्मीलयन् मदीये बहुविधबोधाञ्जनैः पूर्वम् ॥ २० ॥
बुधगणवन्दितचरणः शरणागतवत्सलो जयति ।
श्रीमा'न्नीश्वरनाथो' यो मयि शुभवैदुषीं व्यतनोत् ॥ २१ ॥
व्याकृतिकलाप्रवीणं सालङ्कृतिकाव्यमर्मज्ञम् ।
तत्पादाम्बुजसेवा मामकरोदल्पकालेन ॥ २२ ॥
प्राप्त स्मृतिविषयोऽसौ 'श्रीजगदीशो'ऽतिशिवभक्तः ।
निपुणं न्यायन्याये कृत्वा मामुपकृतं चक्रे ॥ २३ ॥
श्रेष्ठ 'षष्ठीनाथ' श्रोत्रियवशावतंसो मे ।
वेदान्तज्ञानगुरुः काश्यां परलोकपथिकोऽभूत् ॥ २४ ॥

मम परिचयमेनं स्पष्टमक्लिष्टरूपं
गुणमयमगुणं वा नूतनं कौतुकेन ।
रुचिररसविचारग्रन्थपाठप्रसङ्गे
परकृतिषु प्रतीता साधवो भावयन्तु ॥ २५ ॥



# प्रथमाननस्योदाहृतश्लोकानुक्रमणिका

# द्वितीयाननोत्प्रेक्षान्तभागस्योदाहृतश्लोकानुक्रमणिका




प्राप्तिस्थानम्—

चौखम्बा विद्या भवन,

चौक, वाराणसी–१